श्री.

आर्यमित्र पुस्तकांतील

# सत्पद्यहार






हें

पुस्तक

**वामन एकनाथ शास्त्री केमकर**




आर्यमित्रकर्ते

व

पूना नेटिव इन्स्टिट्यूशनचे

संस्कृताध्यापक

यांणीं

तयार करून

पुणें

पेठ बुधवार येथें "अंबाप्रसाद" छापखान्यांत छापिलें.

सप्तंबर सन १८८८ इ०

किंमत २ रुपये.

# ग्रंथांचा अनुक्रम.

# आर्यमित्र·
# सत्पद्यहारः

श्लोक (शालिनी·)

श्रीशं नत्वा देशसेवाममोघां मत्वा चित्वा सत्कविश्लोकसारं
आर्या युष्मत्कंठभूषाऽनुरूपं बध्नाम्येतं हंत सत्पद्यहारम् १

## रतिनीतिमु[illegible]
## आर्या·

भव्या निर्जेकसेव्या ददती चातुर्यतश्चतुर्वर्गम्[1]।
स्वस्मिन्नेव रतिमती[2] सतीव मतिरेव जयति नीतिरपि १॥
मलिना अपि संयमनात्[3] कुटिला[4] अपि सुमनसां[5] समागमतः।
बाला[6] अपि मुक्तानां[7] मनुषंगान् निर्जरेज्यतां यांति॥२॥
कुटिलाकुलोपि राग्यपि दर्शनतः क्षोभकोपि बद्धोपि।
सीमंतक[9]वदृजुश्चेन् मुक्ताभूष्यो न किं भूयात्॥ ३॥
रागैकमूर्तिरपिसन् विशालममलं शिवं[illegible]व।
लब्धा सौभाग्यकरो नरो न किं भालं[10]मिव तिलकः॥४॥
गुण[11]कोटि-शालितायामपि सत्सामेहि नम्रतामेव।
भ्रूधनुरिवाबलानां [illegible]भो ऽन्यथा कटाक्षेऽपि॥५॥
श्रुति[12]परिचयेऽपि यावन् निरंजनत्वं[13] न रागिता[14]वशतः।
तावत्त्वंजनमलिनैश्चापल्यं तन्यतेंऽगनानयनैः ॥६॥
आलोचयद्भिरखिलैः श्रयणीयः साधुपक्ष एव मुदे।
नहि सुंदरीदृगंतः श्रयते कुटिलां भ्रुवं श्रुतिं हित्वा॥७॥
श्रुतिपरिचयेपि बहिरिह शोभनवृत्ते[15]पि दृष्टियोगेपि।
खंड्यः सितै द्विजै[16]र्मृदु खलः स्वबालाकपोल[17]श्च॥८॥

---

१·धर्मार्थकाममोक्षरूपं· २ प्रीतिसंपन्ना ३ बंधनात् इंद्रियनिग्रहाच्च ४ वक्राः कपटाश्च· ५ पुष्पाणां, सज्जनानां च· ६ केशाः पक्षे· अज्ञानिनः ७ मौक्तिकानां ब्रह्मनिष्ठानांच· ८ तरुणानां पक्षे देवानां पूज्यतां· ९ वेणीकृत केशपाश मध्यभाग इति यावत्· १० ललाटं भाग्यंच· ११ रज्जुः दाक्षिण्यादिश्च· १२ कर्णः वेदश्च· १३ कज्जलरहितत्वं अज्ञानराहित्यंच· १४ रक्तता· कामुकताच – १५ वर्तनं वर्तुलंच· १६ विप्राः दंताश्च· १७ गडः

त्रातापि च द्विजानां रागीत्यन्यैर्द्विजैः क्षतोपि बत ।
न जहाति मधुरिमाणं मुग्धाया अधर इव धीरः ॥ ९ ॥
सत्कर्मणाति-विमलं चिरं प्रसन्नं स्वनाथयोगेन ।
वीक्षण-रम्यं रमणीमुखमिव सुखदं तु मन एव ॥ १० ॥
सत्स्वेवांतः प्रेम्णि द्विजराजानां रुचिर्बहिः स्फुरति ।
बालानां तु स्नेहाद् बाल्यादेवेक्ष्यते सा ऽत्र ॥ ११ ॥
सुदृशां कटाक्षलाभाद् योऽयं रसिकस्य जायते मोदः ।
किमसा वनीक्षणानां भूयात् सर्वात्मदर्शनेनापि ॥ १२ ॥
अमृतं विना न तृप्तिर्विबुधानामपि हि दृश्यते क्वापि ।
रागी तस्य तु निकटे सत्त्वेऽप्येति क्षतं युवत्यधरः ॥ १३ ॥
यो यो यं यं विषयं मृगेक्षणापांग इव समाश्रयते ।
तत्स्मितवदेव तमपि त्वमनुसरेह [illegible]ः ॥ १४ ॥
सेरसेऽपि च संदर्भे ह्रद इव कमलं विकाशमेति मुखं ।
आयत-दृशामिव मुहुस्तस्मात् मास्त्वल्प-दृष्टि-संगोपि ॥ १५ ॥
प्रो[illegible]ंग एव प्रतिक्षणं जायते बतास्माकं ।
अंधे मृगनयनानामिव मूर्खे रसविकासेन ॥ १६ ॥
सख्यं यत्र न तत्र व्यवधानं क्वापि किमपि कर्तव्यं ।
इति शिक्षितुमिव दृष्टिः श्रुतिमेवोपैति मुहुरनल्पदृशां ॥ १७ ॥
महतामेव तु संगात् नश्यत्यखिलोपि किल कलंकोपि ।
इति निर्णीतं सुदृशां मुख[illegible] निरीक्ष्य खलु सोमं ॥ १८ ॥
विद्याभ्यासे क्षणमपि रे चपला मा कुरुध्वमालस्यं ।
किमपांगैर्मुग्धानां श्रुतयो लवमपि विरम्य सेव्यंते ॥ १९ ॥
हृदये सौवर्णं गुणमप्येवं तस्तु रागिरत्नमपि ।
सौभाग्यबीजभूताः सुदृशां निवसंति नासिके मुक्ताः ॥ २० ॥
गुणपारतंत्र्यभाजां रंध्रवशाद् बंधनं विशङ्कानां ।
मुक्तानामपि दृष्टं धिग् धिग् सच्छिद्रतां तस्मात् ॥ २१ ॥
श्लेष्मागारे वसतिर्जातास्मा॰ . तदत्र मायाध्वं ।

---

१ कामी, रक्तश्च· २ सदाचरणं केशप्रसाधनंच· ३ आत्मा, पतिश्च· ४ विचारः नेत्रंच· ५ उदकंच, शृंगारादिः ६ बहुज्ञाः स्त्रियश्च· ७ सूत्रं, सत्वादिश्च· ८ छिद्रं संकटंच·

आंदोलनच्छलादिति निवारयंत्येव मौक्तिकानि विटान्[1] ॥२२॥
सौरभ्यग्राहकताऽत्रेति धियारादिहागता मुक्ताः।
गुणरोधोऽधरसंगः पृथ्व्या अपि नासिकाभिधांगे[2]ऽभूत् ॥२३
अंजनरंजनवशातो हंतौ[3]धररागसंगितायोगात्।
मुक्तानामप्यासीद् गुंजात्मकता तदत्र काऽन्य कथा ॥२४॥
अपराधोपि च सोढुं निर्मल हृदयस्य शक्यते रसिकैः।
किं मुक्तानामधरैः स्वकांतदंतस्तिरस्क्रियते ॥२५॥
यदि सरसौ यदि सुहृदौ यदि साम्येनानुरागिणौ च नरौ॥
मा नर्हिभेदभाजो सुंदर्योष्ठोपमं भवतां ॥२६॥
अपहारितं यदिष्टं तादृगपि प्राप्यते न यत्नेपि॥
क्षणवृद्धिभागपींदुर्न कामिनीवदननीत शोभास्यः॥२७॥
स्वापेक्षया तु नीचैः सहसंलापोपि नैव बतकार्यः।
सीमंतिनी[4]दृगंतः कर्णवदुपयाति किं कदाप्यधरं ॥२८॥
सत्संगे सत्यपि बत दुर्गुण एवाप्यतेऽन्यतो मुग्धैः
श्रुतिगोष्ठ्युपेतपांगः कौटिल्यं बालगं न संयमनं ॥२९॥
अभिलषितसिद्धिकामः प्रसादमेवाधि-साधयतु रागी।
नत्यधरो द्विजवररुचि-मनाप्य लभते स्वरागसाफल्यं॥३०॥
मलिनोपि सांजनोपि च भूयः श्रुतिमेति युवतिलोचनवत्।
वालाग्रमात्रमपि परमालिन्यं स्फुटयितुं किलात्र खलः॥३१॥
कुटिलैरपि मलिनैरपि वालैरपि सुमनसां च मुक्तानां।
संगादूयमन-स्निग्धैरुत्तम-पुरुषायितैर्धृतामुक्तिः ॥३२॥
मंगल-निजाभृतां धि-मज्जनतः स्नेह-सौरभव्यासाः।
अपि कुंतलाः सतामपि चेतो न हरंति किं मुक्ताः॥३३॥
लब्धदृगंतदृतयः स्वर्वर्णगुणभूषितोभयश्रुतयः।
अप्यांदोलनलोल मुक्ता अपि चित्रमिह बद्धाः॥३४॥
[illegible]जराजिसंगतोपि च सरसोपि च कोमलोपि मधुरोपि।
शिव शिव रागित्वादिह नरः संतो मध्यैमाधरश्चापि॥३५॥

१जारान्. २अवयवः क्षेत्रविशेषश्च ३नीचसंसर्गः ओष्ठरक्तिमाच. ४तरुणी. ५कांतिःप्रीतिश्च. ६सत्पुरुषवदाचरद्भिः ७निर्मोचनं अपवर्गश्च. ८दंतपंक्तिःविप्रसमूहश्च ९रसिकः आर्द्रतायुक्तः १०दृष्टःनष्टश्च ११युवतिः

सद्वृत्तमपि स-कंटक-मतिमृदूपि रागि गौरमपि सांकम् ।
श्रुति दृष्टिसंग-शाल्यपि गृहीतबिंबं कपोलवच्चित्तम् ॥३६॥
सर्वमपि च वरतनुं स्वात्मनि बत गृण्हतः क्व कंटकतः ।
लाभो ऽभूद्भवति भवेत् खलस्य बालाकपोलस्य ॥ ३७॥
श्रुति [illegible] को ऽप्य पांग संचार [illegible] गरहितोपि ।
चुंबनचिन्हविहीनः किमिति नमान्यः कपोल इव धन्यः ३८
निज पूज्य द्विज विरचित-शासनहीनो नरः क्व मान्यः स्यात् ।
मृगमदपत्र-विचित्रोप्यबलायाः किल कपोल इव ॥ ३९॥
[illegible]नपि हृदि रसरहितान् भर्त्सयंति खलु सरसाः ।
तरुणी-श्रवणा-भरणग-मणयोपिहि तत्कपोल-धर्म जिताः ४०
स्वल्पप्रसाद[illegible] सति न महाशा बुधेन सुविधेया ।
नो चेत् क्षतिरति-रागात् दृष्टमिदं किल सुतन्वधरे ॥४१॥
उपलभ्य रहसि रसतः स्वकीय-दोषं व्यनक्ति सौभाग्यम् ।
किमियं वधू-विरोधि-र्नहि नहि धौरे वधूरेव ॥४२॥
सगुणीयः कंठस्थः स च कंठो गुणवतैवयः श्लिष्टः ।
स च मणिरपि यो गुणवान् गुणोप्यसा वेवयो मणिमान् ४३
[illegible]पि मा कुरु वृद्धो संच्छादनं रहसि महतः ।
मा तव कंचुक्या इव हिरण्यकशिपोर्दशा भूयात् ॥ ४४॥
तौ खल्विह परलोकौ या[illegible]नंद एव संलभ्यः ।
किं भामिनीभुजौ तौ याभ्यां नालिंगितः कांतः ॥४५॥
यौ स्वश्रेयः पदमिह सततं शांत्यै मृदू निषेवेते ।
तौ चेद्बोधविरागौ तर्हि सरागौ करौ धिगबला[illegible]॥४६॥
सुमनोभिर्गुंफितत्वे गुणवत्वेऽपि च महान् नबत लंघ्यः ।
बालावक्षोरुहगतमाला तन्मर्दनात् पुरा विकला ॥४७॥
महता ऽल्पस्य तु सत्कृतिरुपदेशायैव तन्यते यशसां ।
मुक्ताः स्तनेन विधृताः शिरसि गुणौत्वप्रकाश[illegible]पदेष्टुं ॥४८

---

१ रोमांचः उपद्रवः २ ग्रीवा ३ हे मूर्ख. ४ गुणवान् सूत्रितश्च ५ अवस्थाविदारणमिति यावत्. ६ स्तनः ७ विद्यादिः रज्जुश्च.

प्रकृतिः परीक्ष्य हेया महत्वलिप्सावता तु या नीचा ॥
गुरुतांविना कुचः किं मुक्तानामाश्रयो भवति ॥ ४९ ॥
यदि गुणभरपरिपूर्णं किंचित् तद्रंध्रमपि बरं मन्ये ॥
हारत्वमेव याताः पयोधराभ्यां धृताः स्वहृदि मुक्ताः॥५०॥
अति गुरुतरनिर्वाह्यः प्रभोल्ये क्वापि नैव कर्तव्यः ॥
वक्षोरुहे कुमार्याः मुक्ताहारोपि यद् भारः ॥५१॥
स्वापेक्षया तु नीचैः सह संल्लापोपि नैव बत कार्यः॥
तत्र क्षतेऽपि भूषा स्वस्य च तत्कारिता येन ॥ ५२॥
सद्वासनोपि गुणवानपि च स्तब्धस्य संगतः पतति ॥
हंत स्तनप्रसंगाद् विमर्द्यते मालतीहारः॥ ५३॥
सद्वृत्तोपि च मुक्ता-भरणोपि च ?तरसोपि च स्तंभात्॥
मुखकाष्ण्यर्मेत्य नियतं युवतिस्तनयुग्मवत् पतति ॥५४॥
अंतर्गूढरसोपि च काठिन्यादेवयाति बहुघातं॥
तरुणीपयोधराभ्यां महागुरुभ्यामियं मतिर्लभ्या ॥५५॥
सत्यप्यतुल-महत्वे यः काठिन्याद्भिनत्ति परहृदयं ॥
सोवश्यं याति क्षति-मिति दृष्टं कामिनीकुचयोः ॥५६॥
मुक्तावल्यवलंब्यपि गुरुरपि सरसोपि नवकपटतोलं ॥
हा च्छाद्यते सुदृग्भिस्तदसौ मुखकालिमानमेवैति ॥५७॥
कार्यः संगो महतां महद्भिरेवेह न क्वचिल्लघुभिः ॥
नो चेद्गुणभंगःस्यान्न स्त्र्याश्लेषे स्त्रजः स्वस्थाः॥५८॥
आविष्कृत्य स्वगुणं तत्र ?[illegible] सुमनसां ग्रहणं॥
कर्तुं वीरश्चतुरो मालाकारः पयोधरश्चापि ॥ ५९॥
हंत पयोधरमंडलमतियातुं नैव युज्यते मुक्तैः ॥
रहसि बिना पुरुषायित-मतुलस्निग्धैर्यथांगनाचिकुरैः॥६०॥
रे बालाः संयमनं त्यक्त्वा लोकेपि कठिनतावश[illegible]ः॥
स्फुटयंतः कौटिल्यं कुरुध्वमतिलंघनं न गुरोः॥६१॥

---

१ श्रेष्ठतां-पुष्टतांच-२ मौक्तिकानां जीवन्मुक्तानांच-३ दयौदार्यादिः सूत्रंच ४ विषमकालः छिद्रंच-५ शुभवासनः सरभिश्च-६ वृत्तं वर्तनं वर्तुलंच-७ हर्षः स्तन्यंच-८ गर्वात् स्तंभनाच्च-९ नवं इतरैरस्पृष्णं परानभिज्ञेयंवा यत् कपटं तस्मात् पक्षे नव एव-नवकः (स्वार्थेकः) सचासौपटः वसनं तस्य १० दीर्घदर्शिभिः सुनयनाभिः स्त्रीभिश्च-११ पुष्पमालाः १२ भो मूर्खाः केशाश्च १३ कपटं वक्रत्व-

स्नेहभरादपि केशैः सहृत्तातिक्रमो न कर्तव्यः ॥
नो चेत् संयमभंगात् कौटिल्यं प्रकटमेव स्यात् ॥ ६२॥
उचितं हृदयंगमनं सुदृशां कुत्रापि नोचितं भवति ॥
स्यादन्यथा जगत्यप्यभिलाषः सर्वथा प्रकटः ॥ ६३॥
सहृत्तस्त्वं मा कुरु जातु स्तंभात् परस्य संक्षोभं ॥
इत एव कालिमास्ये जातः किल कामिनी कुचयोः ॥ ६४॥
उरसि धृतोपिच हारै रलंकृतोप्यर्चितोपि चंदनतः॥
ललनास्तन इव पिशुनः काठिन्यं नैव हा त्यजति ॥ ६५॥
महतां स्तब्धत्ववशात् स्वपरहृदयभेदनं किमिदमुचितं ॥
हंतानेनैवाभूद् गुणेन पतनं पयोधरयोः ॥६६॥
सत्यामपि गुरुतायां युक्तः स्तंभः किमत्र सरसानां ॥
स्यादन्यथा ततो बत सद्वृत्तभंगः क्षतैः कुचवत् ॥ ६७॥
अपराधोपि लघूनां महद्भिरुच्चैर्विभूषणीक्रियते ॥
मृगलोचनास्तनाभ्यां नखक्षतं मस्तकेपि धृतं ॥ ६८॥
यद्यपि कठोरसंगात् [illegible]रि-सुरभि रपि मर्द्यः॥
स तथापि तत्र तनुते सुवासनामेव कुंकुमवत् ॥ ६९॥
मलिनेन महति युक्तं नो कर्तुं मंडनं च सौरभ्यं ॥
तत् किंचिन्मालिन्येऽप्येणमदः किं न मर्द्यते स्तनयोः॥७०॥
गुणवत्त्वेऽपि क्षणमपि नैव गुरोः प्रत्यवस्थितिः कार्या॥
तरुणी-मौक्तिकहारे तत्करणाद् दृश्यते भ्रंशः॥ ७१ ॥
रमणीकर्ण इव बहिः केशविकारोऽपि दुःखदः सहृदि ॥
रहसि तु तस्याः कुचवत् क्षतमपि न गुरावपि क्षतये ॥७२॥
अहमपि दृढोतिर[illegible]णवानोजस्वीत्यस्य भूषणं कुर्यां॥
इत्यवहेल्यो न महान् क्षुद्रैर्मणिहारवद् गुणोच्छित्त्यै ॥७३॥
दातुं रसं निजाय क्षतमपि पतनंच मर्दनं चापि॥
शिव शिव वक्षोरुह इव सहते सहृत्त एव गुरुः॥७४॥
परतन्त्री रमणीयाप्यनवेक्ष्या परपुमान् महानपि च ॥

---

१ कदाचित्. २ विपरीतवर्तनं मर्यादातिक्रमो वा. ३ मर्यादा[illegible]. ४ केशकृतो मित्रपक्षे केशमात्रा विकृतिरिति ज्ञेयं ५ गुणः दृढत्वादिः सूत्रंच.

तरुणीरोमावल्या किमीक्ष्यते स्तनयुगं च सा ताभ्यां[1] ॥७५॥

परचक्राणां मध्ये बलमबलानां[2]ेव सुस्थिरः क्षीणः ॥

अत एव मध्यमानां मध्यस्तादृग् बभूव किल ॥७६॥

मध्येस्थलं[3] न विना गभीरतां नापि वाङ्धिदानगतां[4] ॥

भीरूणां नाभिरतो भवति तथा भूरिभाग्येन ॥७७॥

सा किं गुणमयताया न गुह्यमाच्छा[द]येत् स्वगुणयोगात् ॥

तदपि च[5] किं गुह्यं यन्नगुणगणै गूहितं भवति ॥७८॥

तुंगत्वं भगवत्त्वं स्मरतांलंबित्व[6] मतिमहत्वं च ॥

कांचीनिवासफलकं स्त्रीजघनस्येव सधनस्य ॥७९॥

द्वावपि यत्र गुरूस्तत्र तु न क्वापि कापि विद्या स्यात् ॥

रंतुर्नितंबिनीनां[7] नितंबतः किं स्मरवं जघनतुल्यं ॥८०॥

मृदुता [illegible]ऽतुलनिर्मलताऽनुक्रमेककृशता च ॥

रंभोरूरुसुजंघे[8]ऽनुलंघ्ये सहूचस्यपि च ॥८१॥

अति सूक्ष्म-गुणविचित्रा परमपवित्रा वृता बहिर्गात्रा ॥

किमियं शाटी[10] नहि न हि धीरवधूटीव[11] साधुपरिपाटी ॥८२॥

ध्वनिललितालंकारै[12]-मृदुलव्यापारमतुल-सुकुमारं ॥

एकं सत्कवि-काव्यं सीमंतिन्याश्च पदयुगं भव्यं ॥ ८३ ॥

द्विजराजगविद्यायां यदि लिप्सा तर्हि याहि भो धीरं ॥

न हि सुंदरी प्रमादे हंसानां गमनमुपयाति ॥८४॥

यदि वांछसि पांडित्यं प्रतिपदमालस्य-मेव तर्हि जहि ॥

किं रमणी-मंजीरं शिंजानं पठु जडं भवति ॥८५॥

ध्वनिमाधुर्य-[illegible] विना किमाप्येत सद्गतिस्तु जडैः ॥

राभान्[illegible]रयुगुले स्पष्टमिदं दृष्टमस्ति जनैः ॥८६॥

सदृशां पद्मं विना किं रत्नतुला कीदृरित्र कुत्रापि ॥

यत्लक्ष्मी सतावाप पद्मे पर्यत्लमतस्मो[16] ॥८७॥

---

१ स्तनाभ्यां २ स्त्रीणां ३ निःपक्षपातत्वं ४ शास्त्रपारंगमतां नाभिपक्षे-वागुत्पत्तिस्थाने वर्तमानत्वं ५ शमादि पूर्णता तंतुमयताच ६ ऐश्वर्यं मदनमंदिरंच ७ देवत्वं रतिश्च ८ क्षेत्रविशेषः रशनाव ९ वर्णाः पीतादिः अक्षराणिच १० तंतवः सौंदर्यशमादयश्च ११ वस्त्रं १२ प्रौढस्त्री १३ वर्तनपद्धतिः १४ व्यंग्यार्थः नूपुरसिंजितंच १५ उपमारूपकादयः [illegible]गदादयश्च १६ पद्म (पादेन) मीयते (उपमीयते) रतिपद्मं अर्थात् सुंदरीपदसादृश्यगुणेनैव कमले पद्मत्वव्यवहार इतिभावः १७ परोपमानत्वात्

सविमर्शमेव मंदं मंद मतुलमार्ग एव गंतव्यः ॥
किं तरुणीचरणाभ्यां गजेंद्रगतिरन्यथा लब्धा ॥८८॥
किंचिल् लालनशिक्षणसन्मार्गस्मारणेभ्श्च धीः शोध्या ॥
तदनंतरं स्वरसतो वशतां नेया नवोढेव ॥८९॥
स[illegible]विलोभनवशा रसास्वादयोगतः क्रमशः ॥
मुग्धेव बुद्धिरादरसत्कारैः प्रौढतां नेया ॥ ९०॥
गुरुभिरनुशासितानां नम्रत्वं भूरि भूषणायैव ॥
उद्धतपयोधरा चेत् द्यौरिव वनिता न तैराढ्या ॥९१॥
बाल्यंजिहासवो ये तैरनिशं हृदि सद्वृत्तमेवेज्यं ॥
मध्याभिरेव बुद्ध्या कुचमंडलमंडनं क्रियते ॥९२॥
इष्टौ श्रुतिपरिशीलनमपि हृदये गुरु-समर्चनं सुचिरं ॥
मार्गं निरीक्ष्य गमनं प्रौढत्वं लिप्सुभिः कार्यं ॥ ९३॥
अ[illegible]त्या स्वप्रेयोमात्रपूजनेऽभिरता ॥
युवतिर्मतिश्च विबुधै रसतीत्याज्या सती पूज्या ॥९४॥
दृष्टिर्विनता वाणी पीयूषेणेव पूरिता सुदृशां ॥
द्विजराजपोषकत्वं किमितिन तत्रानिशं भूयात् ॥९५॥
निजनाथ एव नितरां निष्कपटेनैव सर्वदा राध्यः ॥
नोचेत् किं चातुर्यं न हि साध्वीभ्योऽपरा चतुरा ॥ ९६॥
आदौ गु[illegible]सुरं भूरितररसास्वादः ॥
तदनंतरमेव भवेद् भाग्यैनंदेन [illegible]ः ॥९७॥
केशच्युत-सुमनश्च्युतिरपि रम्या निजरतिप्रचुर-तमौ ॥
यस्माद्धृदयग्रंथेर्भेदाद् दृष्टिर्निरंजना भवति ॥ ९८॥
हृदयं क्षतमपि रतये सुदृशामधरोपि खंडितः प्रीत्यै ॥

१ शब्दार्थश्च सत्काराः कनकादिमयभूषणानि च २ शिक्षकैः स्तनजघना[illegible] ३ मेघः स्तन-श्च ४ अमुग्धा प्रौढस्त्रीभिः ५ वेदः कर्णश्च ६ [illegible] प्रौढावस्थातंत्र ७ परः उत्कृष्टः अनुरागः (प्रीतिः) युवतिपक्षे परस्मिन्पुरुषे जार इतियावत्- अनुराग इति सप्तमी समासः ८ ब्राम्हणश्रेष्ठाः दंताः चंद्रश्च ९ सुस्तवयवर्ष [illegible] यः नीतिपक्षे उपदेष्टुराश्रयः १० रसः ज्ञानजन्य आनंदः अधररसश्च ११ महापुण्यसाध्यः स्वानंदः रतिपक्षे [illegible]रः १२ ब्रह्मशिवौ पक्षे सुगमं १३ देवाः पुष्पाणि च १४ आत्मानंदः सुरतानंदश्च १५ संशयरूपस्य चिज्जडरूपस्यवा हृदयग्रंथेः रतिपक्षे हृदयसन्निहितो ग्रंथिः कंचुकीबंध इतियावत् १६ अज्ञानरहिता, निष्कज्जला च १७ क्षीणं पक्षे सव्रणं चेति-

विवसनतापि[1] रसोसेर[2]नुपमपरितुष्टये भवति ॥ ९९ ॥
निजदीर्घदृष्टिलाभात् तत्संभोगाच्च नाकृतार्थः स्यात् ॥
यत्राद्वैतानंदं परमैक्यादचलतो याति ॥ १०० ॥
याभिः सह स्वविलासादैहिक पारत्रिकोपि पुरुषार्थः ॥
नीतिभ्यश्च सतीभ्यो भूयस्ताभ्यो नमस्कुर्मः ॥ १ ॥

इत्यच्युतविरचितं रतिनीतिमुकुलं नामार्या-
शतकं समाप्तं.

## आर्या.

इदमच्युतकविविरचितमच्युतसंस्कारस्फरसगंभीरम् ॥
रतिनीतिमुकुलमविकलमीषद्विकसितमिहास्तु रसिकमुदे ॥ १ ॥



---

१ नग्नत्वं २ ब्रह्मरसलाभात् शृंगाररसप्राप्तेश्च. ३ अनुभवात् आलिंगनाद्युपभोगाच्च.

* हें रतिनीतिमुकुल नांवाचें आर्याशतक प्रसिद्ध अर्वाचीन कवि अच्युतरावजी मोडक नाशिककर याणीं केलें आहे. या काव्यांत श्लेष, अर्थांतरन्यास, उपमा, व अपन्हुति इत्यादि अलंकार साधून प्रत्येक आर्येंत रति (शृंगार) पर, आणि नीतिपर असे दोन अर्थ वर्णिले आहेत यास्तव भर्तृहरि, जगन्नाथपंडित या प्राचीन महाकवींच्या शतकांहून या शतकाचा प्रकार अगदीं वेगळा असून संस्कृतज्ञ रसिक वाचकांस मनोरंजक आहे. इतर लोकांकरितां या मुकुलांचा महाराष्ट्र भाषेंत विकास करण्याचा सवडी प्रमाणें आमचा विचार आहे.

## श्रीम[illegible].

यो दीनान् गोपायति पतितां स्वीकृत्य कृत्यकविरहितः॥
तं प्रतिपन्नः संप्रति भवति नरः कृत्यकृत्यकविरहितः॥१॥
गा हे तच्चरितरसे तरसेतरसे न मज्जनं कुरु ते ॥
रतिरस्तु गुरौ मानस स यतः स्वसमं नमेज्जनं कुरुते॥२॥
नंदनतोऽप्यवति निजान् कृरवयति सविधेऽधिकं च नंदनतः॥
मंद नतो भव तस्मिन् नेच्छति बलि मपरमेष वंदनतः॥३॥
दलयत्यघं त्रिपथगा तापं ग्लौर धनतां च कमनोऽगः॥
दुरितं दाहं दैन्यं हरति गुरुः [illegible] वृंदकमनोगः॥ ४ ॥
चतुरोर्याद्याक्षरघट नो धत्तां वामनस्यैके हस्तम् ॥
चतुरोर्याद्याक्षरघटनो धत्तां वामनस्य कै हस्तम् ॥५॥

इति श्री[illegible] योगानंद पदारविंदमिलिंदायमानमानसैकनाथसूनुवामनविरचितं श्रीगु[illegible] समाप्तम् ॥७॥

---

१ रक्षति २ शरणागतः ३ कृती (धन्यः) अकृती (कर्मबंधनरहितः) असुविरहितः प्राण वियुक्तः। अत्रैवं योजना, गुरुं प्रपन्नो नरः संप्रति (देहसंयोगकाले) कृती भवति असुविरहितः सन् अकृती भवतीति ४ तरसा (बलात्कारेण) इतरसे (नीरसे) अर्थात् विषयरसे ५ नमंश्चासौ जनः तं ६ [illegible] आदध्याधिकं ७ इंद्रोद्यानात् ८ गंगा ९ चंद्रः १० कमनसां (देवानां) अगः (वृक्षः) कल्पवृक्षः ११ [illegible] (नतसमूहस्य) कमनांसि (कहृचित्तानि) गच्छति प्राप्नोतीति भक्तानां हृद्गत इति यावत् १२ चतुर आर्याद्य (आर्याणांमुख्य) अक्षरघट (अक्षराणां घट इवेति) हे पंडित १३ अके (दुःखे) ईहा (इच्छा) यस्येति तथा अकेहः १४ चतस्रः आर्याः 'योदीनान् गोपायती'त्याद्याः समाहृताः इति चतुरार्यं तस्याद्याक्षराणि प्रथमवर्णाः तैः घटना (नामरचना) यस्येति तथा- [illegible] रैः योगानंद इति चतुरक्षरं नाम कथ्यते तेन प्रसिद्धः श्रीगुरुरित्यर्थः।

१५ मस्तके

श्रीलो॰॰॰॰॰यतिविरचितं नारायणाष्टकम् प्रा॰

(शार्दूलविक्री॰)

ओंनमः

सत्यं ज्ञानमनंतमेकमचलं रूपादि-हीनं परम्
यत्सौख्याब्धिकलांश-निर्वृततरा ब्रह्मादयो निर्जराः॥

---

श्रीगणेशायनमः मिलिंदालिकुलालाप संल्लापितकपोलकं॥ प्रत्यूहजालचिलये कलये शिवबालकं॥ १॥ नत्वा समस्तबुधवंदितपादपद्मां वाचं विचिंत्यहृदये च गुरुं यतीशं॥ काव्यांतराणि खलु टीकयितुं महांति नारायणाष्टकमिदं विवृणोमि पूर्वम्॥ २॥ ॥अथास्य महाकवेरित्थमुदंतो विज्ञायते। अयं हि श्रीमद्गोदावरीचपललहरीपरीते सुपूते सुवर्णापणनाम्नि[१] पत्तने शालिवाहनशाकीयशरदां षोडशशत्यामतीतायां ज्योतिर्विदाममलं कुलमात्मप्रादुर्भावेनालं चकार। ततश्च सखेत्युपपदांकितं रामाभिधानं दधानः सुधीः क्रमेणोपनीतः सांगा अधीत्य ऋचः परिचीय चाविकलं विविधशास्त्रजालं स्नातः शीलोदारान् धर्मदारान् परिणीय समनुष्ठाय च गार्हमेधीयमखिलं, मुक्तिपुर्यादितीर्थपरिचरणापदेशात् सकलत्रः पवित्रवनेषु प्रतिष्ठमानः स्वायुषश्चत्वारिंशत्तमे हायने सूनुविन्यस्तत्रिवर्गार्गलो निसर्गविरागी श्रीपांडुरंगपुरमुपेत्य[२] श्रीमतो नामतोऽर्थतश्च पूर्णानंदान् यतींद्रानुपसद्य सद्यः संन्यस्ततामुररीचकार॥ अथ च सांप्रदायिकीं योगपूर्विकामानंदाख्यां समुद्वहन् यतिदीक्षा॰॰॰॰ तचेताः सुचिरमान्वीक्षिक्यामभिरतो दिगंतावेक्षणाय प्रचलितो गृहीतदंडः प्रचंडपुरमभ्येत्य[३] षाट्पदीं वृत्तिमनुवर्तमानः परित्यक्त-दुरभिमानः समानः संमानविमानयोः कंचित्समयं समाहितमनाः समध्युवास। तत्र हि बहुविधान् निबंधान् निबध्नन् कंचित् कालमतिलंघ्य कोशत्रयवर्तिनीं चतुर्वर्ण-विराजितां र. वर्णपुरीमगच्छत्[४]। तस्यां च श्रीयोगिनीपतिसविधमधिवसन् विविधशास्त्रविचारविशारदः परमकारुणिकः पुरग्रामागताननेकांश्छात्रान् श्रुतिशास्त्रादिकमध्यापयन् संस्कृतानभिज्ञांश्च बहुलान् विविदिषूनुपलभ्य तदर्थं पंचदश्यष्टावक्रीयवि॰॰॰॰॰दे गीताप्रमुखाननभियुक्त प्र-

---

१ सोनपेठ. २ पंढरपुर. ३ परंडा. ४ सोनारी.

यद्भास्वत्किरणे मृगांबुसदृशं ह्येतज्जगत् कल्पितं
तं नित्यं करुणार्द्रमानसगुरुं नारायणं नौम्यहम् ॥ १ ॥

बंधानर्थतो महाराष्ट्रवाचा । विष्कुर्वन् विद्यानंदं योगानंदं च सममेवानुभवन् कवियोगानंदः स्वानेहसः समाशीतिं समतीत्य संत्यक्तकलेवरासंगः समाह्नितमतिः शांतचित्तः कैवल्यभुवं प्रातिष्ठतेति

स च महाकविः प्राक् प्रचंडपुरे सज्जनावतंसहंसराजयतिसमेतो निवसन् कदाचिद् विविक्ते स्वचेतसि सच्चिदानंदस्वरूपं सर्वगतं सकलावभासमशेषजीवांतर्यामिणं नारायणमेव परमार्थतः सद्गुरुं निश्चित्याक्लिष्टपुष्टार्थैरष्टभिः पद्यैस्तं तुष्टाव । तदेतन् नारायणाष्टकमिष्टसिद्ध्यर्थं यथामतिव्याख्यास्यामः ॥ अस्य वेदांतप्रकरणत्वादनुबंधचतुष्टयं वेदांतशास्त्रीयमेव बोध्यम् । अत्र हीत्थं प्रकरणसंगतिः । आद्यपद्यद्वये नारायणशब्दवाच्य-परमात्मनः स्वरूपं प्रतिपाद्य तृतीयचतुर्थयोः गुरूपसत्तिं साधनसंपत्तिंच निर्दिश्य पंचमषष्ठयोर्ज्ञानयोगं सप्तम उपास्तिं चोपदिश्याष्टमे जीवन्मुक्तावस्था निरुक्ता नवमेच फलमुक्त्वा संपूरितमिदं प्रकरणं । तत्रायमाद्यः श्लोकः सत्यं ज्ञानमिति । अहं तं नारायणं नित्यं निरंतरं नौमि स्तौमीत्यन्वयः अत्र नारायणशब्देन परमात्मादि शब्दवाच्यं परंब्रह्म लक्ष्यते तत्रैव उक्तविशेषणानामौचित्यात् । व्युत्पत्तिश्चेत्थं । नराणां (जीवानां) समूहो नारं तत् अयते जानातीति नारायणः सकलचराचरसाक्षीतमित्यर्थः कीदृशं नारायणमित्यपेक्षायां तं विशिनष्टि । सत्यं कालत्रयाबाध्यस्वरूपं ज्ञानं चिद्रूपं अनंतं देशकालवस्तुपरिच्छेदरहितं अतएव एकं अद्वितीयं अचलं स्थिरस्वभावं पुनः रूपादिभिः हीनं अत्रादिशब्देनावशिष्टं विषयचतुष्टयं शब्दस्पर्शरसगंधात्मकं गृह्यते । परंसर्वातीतं इंद्रियजन्यज्ञानाविषयमितिभावः पुनः कीदृशमित्याह । यत्सौख्याब्धीति । ब्रह्मादयो निर्जराः देवाः यत्सौख्याब्धिकलांशनिर्वृततराः सौख्यस्यानंदस्याब्धिरिवेति सौख्याब्धिः यः नारायणएव सौख्याब्धिः तस्य कला (अंशः) तस्या अप्यंशः लेशः तेन निर्वृततरा आनंदातिशयभाजः संति तमित्यनुषंगः श्रूयतेचैवं त[illegible]न्यानि भूतानि मात्रामुपजीवंतीति । एवं प्रतिपादितस्य सच्चिदानंदविग्रहस्य परमात्मन एव वस्तुसत्वं प्रतिपादयितुं पूर्वोक्तमानंसंच दृढयितुं विशिनष्टि । यद्भास्वदितियः परात्मैव [illegible] तस्य किरणे

यस्मादेतदुदेति यत्र विलयं गच्छत्यदो वर्तते
विश्वं यन्मयमेव हि स्थिरचरं योऽन्तर्बहिस्तिष्ठति ॥
यद्रूपं विषयो न कस्य चिदहो यद्वाङ्मनोऽगोचरं
तं नित्यं करुणार्द्रमानसगुरुं नारायणं नौम्यहम् ॥ २ ॥
यो लीलाधृतविग्रहः करुणया स्वानां विशुद्धात्मनां
येनासौ निगमाब्धिपूर्णमथनात् सारो हि निष्कासितः॥
यत्पानाद् बहवोऽपि निर्दृततमा याताः स्वयं ब्रह्मतां
तं नित्यं करुणार्द्रमानसगुरुं नारायणं नौम्यहं ॥ ३ ॥

---

एकदेशो इत्यर्थः एतत् दृश्यमानं श्रूयमाणं च जगत् मृगांबुना भ्रमप्रतीयमानज-लेन सदृशं तुल्यं कल्पितं वर्तते न तात्त्विकमिति भावः तं पुनः करुणया आर्द्रमा-नसः प्रपन्नेषु कृपया द्रवच्चित्तः सचासौ गुरुः परमहितप्रवर्तकः तमित्यर्थःअत्र समासेः शार्दूलविक्रीडितं वृत्तं तल्लक्षणं तु सूर्याश्वैर्मसजस्तताः सगुरवः शार्दूल-विक्रीडितं (वृत्तचित्रम्) ॥१॥ ननु प्रत्यक्षादि प्रमाणैः प्रतीयमानस्य शब्दस्पर्शा दि विविधविषयविलसितस्य चक्षुरादिभिरिंद्रियैरनवरतमनुभूयमानस्यापामरप्र-सिद्धस्यानेकव्यवहारपरंपराकलितस्य भूतमयप्रपंचस्य कथमुच्यते मृगांबुसदृशं ह्येतदितिकल्पितत्वमितिचेत् श्रूयतां रज्जुगतदीर्घतयैवाध्यस्तभुजंगमेभोगदै-र्घ्यमिव संभवति सर्वमधिष्ठानसत्तयैव प्रपंचेऽपीत्यत्तरयन्नाह । यस्मादेतदुदे तीति । एतत् श्रुतदृष्टं जगत् यस्मादुदेति उत्पद्यते यत्रच विलयं गच्छति विली यते । वर्तमानदशायां च विश्वं सर्वं स्थिरचरं यन्मयं यदेव यन्मयं यत्स्वरूपमि-ति यावत् वर्तते रज्जुभुजंगवदितिभावः यः अंतः विश्वरूपेण बहिश्च वै श्वानररूपेण तिष्ठति । कीदृशस्तस्याकारइतिचेत्तत्राह । यस्यरूपं कस्यचित्कुशा-ग्रबुद्धेरपि विषयो वेद्यं न । वेत्तृस्वरूपत्वादेवतद् वेद्यत्वं न प्राप्नोतीति भावः। अ-विषयत्वमेव प्रपंचयति यद्रूपंवाचः मनसश्चागोचरमग्राह्यमित्यर्थः तं नित्यं नौमीत्यादि पूर्ववत् ॥ २ ॥ एवं द्वाभ्यां वस्तुस्वरूपं प्रतिपाद्य तदधिगमायगु-रूपसत्तिप्रकारं सूचयन् स्तौति । यो लीलाधृतविग्रह इति ॥ यः विशुद्धात्मनां नित्यनैमित्तिककर्मानुष्ठानेन निर्मलचित्तानां स्वानां स्वभक्तानां करुणयाऽनुकं-पया लीलाधृतविग्रहः लीलया स्वच्छंदेन धृताः विग्रहाः कुमार– व्यासात्रेयादि क-लावताराः येनेति तथा अभूत् । पुनर्येन निगम एवाब्धिः समुद्रः अनंतपारत्वाद्दुर-

यो ब्रह्मेश्वरतां दधात्युपकृतिं कर्तुं स्वपादाब्जयोः
प्राप्तानां शरणं सुशांतमनसां सेवैकनिष्ठात्मनां॥
दत्वा ज्ञानमतीव निर्मलतरं ब्रह्मत्वमापादयन्
तंनित्यं करुणार्द्रमानसगुरुं नारायणं नौम्यहम् ४
यस्मिन्नास्त्यथवास्तिशब्दरचना गंधर्वपुर्यासमा
यस्मान्नास्त्यपरं विलसितमसत् प्राहुर्महापंडिताः॥
सत्ता ज्ञान सुखोपलक्षितमजं पूर्णं स बाह्यांतरम्
तं नित्यं करुणार्द्रमानसगुरुं नारायणं नौम्यहम् ५

---

वगाहत्वाच्च। तस्य पूर्णमविकलं मथनमालोडनं तस्मात् मंथनं कृत्वेत्यर्थः ल्यब्लो ? पे पंचमीयं । सारः तात्पर्यभूतः अर्थः निष्कासितः सूत्रादिरूपेण पृथगुद्धृत इत्यर्थः कीदृशोसौ सार इत्याकांक्षायां तं विशेषयति । यदिति यस्य सारस्य पानात् श्रव-णादित्यर्थः बहवो योगिनः निर्वृततमाः अत्यंतानंदसंपन्नाः संतः स्वयमपि ब्रह्मतां जिज्ञासित ब्रह्मस्वरूपत्वं याताः प्राप्ताः तं नित्यमित्यादि पूर्ववत्॥३॥अधुना शमा-दि साधनसंपन्नानां ज्ञानोपदेशाद् ब्रह्मस्वरूपतापादकतांच तस्यैव वर्णयन् साधन संपदं सूचयति॥ यो ब्रह्मेश्वरतामिति यः श्रीनारायणः सुशांतमनसां शमोमन्निष्ठता बुद्धेरित्युक्तलक्षणशमसंपन्नचेतसां तथाच सेवायां गुरुशुश्रूषायामेवैका ऽ व्यग्रा निष्ठा दृढप्रीतिर्येषांते सेवैकनिष्ठाः आत्मानोमनांसि बुद्धयो वा येषामि-तितथा तेषां अभिमत ब्रह्मात्मज्ञानलाभाय निर्व्याजगुरुशुश्रूषापराणामित्य-र्थः स्वपादाब्जयोः निजचरणकमलयोः शरणं प्राप्तानां 'मुमुक्षूणां' कर्मणि षष्ठी) उपकृतिं प्रत्यगात्मज्ञा[illegible]उपकारं कर्तुं ब्रह्मेश्वरतां ब्रह्मचेश्वरश्चतयोर्भाव स्तत्ता तां विद्याविद्यादियुगुलासंस्पृष्ट-चिद्रूपतां मायोपाधितां च दधाति धारयती त्यर्थः। किंकुर्वन्नित्यपेक्षायामाह। दत्वेति। अतीव निर्मलतरं असंभावना-विपर्यया दिकलंकरहितं ज्ञानं स्वरूप-साक्षात्कारं दत्वा उपदेशद्वारा समर्प्य ब्रह्मत्वं स-च्चिदानंदरूपत्वं आपादयन् संपादयन्नित्यर्थः अयंभावः नारायणशब्दवाच्यः परमात्मैक एवेश्वररूपेण जीवानां हृदितिष्ठन् सुकृतिनांधी वृत्तीरात्माभिमुख्यं नयति ब्रह्म[illegible]नान् निरतिशयमात्मसंवेदनीयं परमानंदमनुभावयतीति युक्तमुक्तं यो ब्रह्मेश्वरतांदधातीति॥४॥ इहोक्तसाधनसंपन्नानां श्रीगुरुवरमुप-सन्नानामत्यभिमतं ज्ञानयोगं सप्रयोजनमुपदिशन् स्तौति पद्ययुग्मेन॥ यस्मि-

यस्याज्ञानवशादुदेति सकलं यज्ज्ञानतो लीयते
येनेदं सकलं विकारिसगुणं व्याप्तं यतो भासते ॥
यं विप्राः प्रवदंति हंत गिरिशं विष्णुं विधिं भास्करं
तं नित्यं करुणार्द्रमानसगुरुं नारायणं नौम्यहं ॥ ६

---

न्निति। यस्मिन् श्रीनारायणशब्दवाच्यपरमात्मस्वरूपे नास्ति अथवा अस्ति एवंरूपा शब्दरचना गंधर्वपुर्या शरदिप्रतीयमानया नानाट्टालकगोपुराद्याभासराजिविराजितया भ्रांतिनिष्पादितया गगननगर्या समा तुल्या। मिथ्यारूपेत्यर्थः नासदासीन्नो सदासीदित्यादिश्रवणानुरोधात् भावाभावामयभावनाविवर्जितं परमात्मनस्तत्त्वमितिभावः। ननु यदेतदुच्यते अस्ति नास्ति शब्दरचनाविवर्जितमिति तन् किंजगतः पृथग्भूतमुत जगदंतःपातीत्यादौ तावद्वक्तव्यं। आद्ये जगतः पार्थक्याभ्युपगमेन सद्वितीयत्व सिद्ध्याद्वैतहानिः द्वितीये सकलेंद्रियगोचरीभूतविविधभावाभावादिमत्पदार्थसंघसंघटितजगदंतर्भाविनः कथमुच्यते भावाभावभावनावर्जितत्वमित्याशंक्य समाधत्ते। यस्मादिति विलक्षितं विविधरूपैः दृष्टं असत् क्षणिकं जगत् यस्मात् श्रीनारायणात् अपरं अतिरिक्तं नास्तीति महापंडिताः तत्त्वज्ञाः प्राहुः एवं प्रथमं विकल्पं परिहृत्य द्वितीयं प्रत्याह। सत्ताज्ञानसुखोपलक्षितमिति॥ अत्रायमभिसंधिः नामरूपात्मकं किल जगत् सच्चिदानंदधामनि परमात्मनि समध्यस्तत्वान्न भिन्नसत्ताकं भवितुमर्हति तेन च नाद्वैत हानिः। तथा च सकल भावाभाव साक्षिणः स्वैकसंवेद्यस्य परमात्मनः सत्ताप्रकाश-सुखोपलक्षितस्वरूपत्वेन वेदकांतराभावात् सुतरां युज्यतेच भावाभाव-भावनाविहीनभावरूपत्वमिति सर्वमनवद्यम् अजं नित्यमितिपदद्वयेन उत्पत्तिविनाशराहित्यं सूचितं तेन मध्यवर्तिविकारचतुष्कमपि निरस्तमितिबोद्धव्यं पुनः सबाह्यांतरं बाह्यं इंद्रियप्रत्यक्षं घटादि अंतरं मनः प्रत्यक्षं संकल्पादि तत्सहितं सर्वगतमित्यर्थः पु० पूर्णं त्रिविधपरिच्छेदरहितत्वेनजगद्व्यापकविग्रहमितिभावः तं नौमीत्यादि पूर्ववत्॥५॥ इदानीमुक्तपरात्मविज्ञानस्य प्रयोजनं निर्दिश्यज्ञानयोगमुपसंहरन् स्तौति। यस्येति। यस्य परमात्मनः अज्ञानवशात् सकलमहमादि घटांतं जगत् उदेति रज्ज्वांभुजंगवदुत्पद्यते। यज्ज्ञानतो यस्य ज्ञानात् लीयते तिरोहितं भवति। अधिष्ठान ज्ञानांतं खल्वध्यासजीवितमितिभावः येन चेदं दृश्यमानं सकलं प्राणेंद्रियादि-कलासहितं विकारिउत्पत्त्यादिविकारशीलं

यन्नामामृतनिर्भरा: सुविमला: पापौघमुज्झंतिते
यद्ध्यानेन निरंतरेण सुखिन: पश्यंतियं योगिन: ॥
यत्पूजाभिरता विशुद्धमनसा प्राप्ता गतिं तूत्तमां
तं नित्यं करुणार्द्रमानसगुरुं नारायणं नौम्यहम् ७

---

सगुणं सत्वादिगुणोपेतं स्थूलसूक्ष्मात्मकं विश्वमितिशेष: व्याप्तं सत्तादिभि: परिपूरितमित्यर्थ: यतो यस्मात् यत्प्रकाशेनेति यावत् तत् भासते प्रकाशते । तमेव भांतमनुभाति सर्वमित्यादिश्रुते: — ननु श्रुत्यादिषु ब्रह्मविष्णुशिवादीनामनेकेश्वराणां प्रतिपादितत्वात् कथं श्रीनारायण एवैको जगद्भासकत्वव्यापकत्व प्रविलापकत्वादिभिर्विशेषणैर्विशेष्यत इतिचेदुपासकानां मतिवैशिष्ट्यादेकस्यैव परात्मनो नानारूपत्व कल्पना ऽभ्युपपत्तेर्मैवमित्याह । यमिति । विप्रा: विद्वांस: यं (श्रीनारायणं) गिरिशं (शिवं) विष्णुं विधिं (ब्रह्माणं) भास्करं (सूर्यं) च वदंति तत्तदुपाधिवैशिष्ट्येन तत्तद्रूपं निरूपयंतीत्यर्थ: । सुपर्णं विप्रा: कवयो वचोभि रेकं संतं बहुधा कल्पयंतीत्यादिश्रुते: तं नित्यमित्यादि यथापूर्वंज्ञेयम् ॥ हंतेत्यनुकंपायामव्ययम् । उपासकानामनुकंपयैकमेव बहुधानिरूपयंतीतिभाव: ॥ ६ ॥ एवं स्वरूपफलसहितं ज्ञानयोगं संक्षेपत: प्रदर्श्येदानीं सद्गुरुकृपालब्धस्य परात्मज्ञानस्य दृढबुद्ध्यारोहायाधिकारभेदाच्च शारीरवाङ्मनोभिरनुष्ठेयामुपास्तिं संक्षिप्याह यन्नामेति यस्य श्रीनारायणस्य नामानि श्रुतिस्मृतिप्रसिद्धान्येवा मृतं तेन निर्भरा: पूर्णा: संतोषवंतइत्यर्थ: अत एव सुविमला: पापवासनामलरहितान्त: करणा: ते मुमुक्षव: पापौघं दुरितसमूहं उज्झंति त्यजंति । इदं वागनुष्ठेयमुपासनमुक्तं । मानसमाह । निरंतरेण अनवच्छिन्नेन अखंडेनेतियावत् यद्वा निर्गतं अंतरं उपास्योपासकत्वलक्षणोभेद:यस्मादिति तथा तेन ध्यानेनऐकात्म्यचिंतनेनेत्यर्थ: सुखिन: आनंदातिशयभाज: योगिन: चित्तनिरोधलक्षणयोगसंपन्ना: यं पश्यंति वृत्तिव्याप्त्या साक्षात्कुर्वंतीतिभाव: । कायिकमाह । यत्पूजेति विशुद्धेन विषयकामविवर्जितेन मनसा यस्य नारायणस्य पूजायामर्चने अभिरता: तत्परा: उत्तमां गतिं सालोक्यादिरूपां मुक्तिं प्राप्ता: यद्वा ये गत्यर्थास्ते ज्ञानार्थका भवंतीति न्यायेन उत्तमां गतिं अपरोक्षं आत्मज्ञानं प्राप्ता: अत्र हि शब्दो ध्रुवादिष्वस्यार्थस्य प्रसिद्धिं सूचयति । तमित्यादि व्याख्यातपूर्वम् ॥७॥

जाग्रत्स्वप्नसुषुप्तिरूपमखिलं त्यक्त्वा प्रपंचं मुनि
र्यज्ज्ञानादहमेव हंस इति यः पूर्णः स्वयं राजते ॥
ज्ञानाज्ञानपथं विहाय सुतरां जीवन्विमुक्तः स्वयं
तं नित्यं करुणार्द्रमानसगुरुं नारायणं नौम्यहं ॥ ८
यो भक्त्या प्रपठेद्दिवानिशमिदं श्रीसद्गुरोरष्टकं
तं दत्वा सुविराग भक्तिसहितं ज्ञानं गुरुः पुष्कलं ॥

---

एवमाद्यं पद्यमारभ्य सप्तमपर्यंतं क्रमेण परमात्मनः स्वरूपं तदधिगमाय गुरूपसत्तिं साधनसंपत्तिं चोक्त्वा तत्त्वज्ञानं सप्रयोजनमुपास्तिरूपोपाय सहितं चोपदिश्याधुना सकलसाधनसंसाधनीयां जीवन्मुक्तिदशां वर्णयन् स्तौति ॥ जाग्रदिति । मुनिः मननशीलः यस्य नारायण-परमात्म-परब्रह्मादिशब्दाभिधेयस्य सर्वसाक्षिणो ज्ञानात् वृत्तिव्यापनरूपात् प्रबोधात् जाग्रदाद्यवस्थात्रयस्वरूपं अखिलं प्रपंचं दृश्यवर्गं त्यक्त्वा अनात्मत्वधिया परित्यज्य यः पूर्णः सत्तादिभिः सर्वव्यापकः हंसः अजपाविद्याप्रतिपाद्यः परमात्मा स्वयं स्वेनैव रूपेण इतरसाधननिरपेक्षमितिभावः राजते प्रकाशते सोऽहमेव इति एवं विमर्शेन ज्ञानाज्ञानपथं सुतरामत्यंतं विहाय अन्यदेव तद्विदितादथो अविदितादधीत्यादिश्रुत्युक्तदिशा आत्मवस्तुनः उभयातीतत्वं दृढं पर्यालोच्येति भावः जीवन् शब्दादिविषयानुभवेन व्यवहरन्नपि स्वयं विमुक्तः व्यवहर्तृत्वबुद्धिमूलकानेकविषयक-वासनापाशविनिःसृतः भवतीति शेषः यद्वा हंसः परम-हंसः पूर्णः श्रीपूर्णानंदयतींद्रः इति एवमाकारेण यः नारायणः राजते सोऽहमेवेति । अन्यत्समानं । यस्य देवे पराभक्तिर्यथा देवे तथा गुराविति श्रवणाद्युक्तमुच्यते परमात्मेव पूर्णानंदरूपेण राजत इति । प्रकृतस्तवाचार्यस्य श्रीयोगानंदयतेर्दीक्षागुरूणां श्रीपूर्णानंदसरस्वती इति सांप्रदायिकमभिधानं विज्ञायते । यस्य ज्ञानादित्थमखिलपुरुषार्थशिरोभूता जीवन्मुक्तिदशा साध्यते साधकैस्तं नित्यं परमकृपालुं परमार्थगुरुं नारायणमखिलांतर्यामिणं नौमीत्यनुषंगः ॥ ८ ॥ एवं प्रतिपत्सितमर्थं श्रीनारायणस्तुतिमिषेण मुमुक्षुजनहितार्थं संक्षेपात् प्रतिपाद्यात्र श्रीनारायणाष्टकस्य पठनादिफलं श्रावयन्नष्टकमुपसंहरति ॥ यो भक्त्येति । यः पुमान् श्रीसद्गुरोः श्रीमान् यः सद्गुरुः नारायणः तस्य । ब्रह्मादीनामपि बुद्धिप्रेरकत्वात् परमार्थतः

स्वात्मानं प्रकरोति केवलमहो कर्पूरकंदीपवत्
तं नित्यं करुणार्द्रमानसगुरुं नारायणं नौम्यहं ॥९॥

इतिश्रीमत् परमहंस परिव्राजकवर्य-पूर्णानंदानुचर-श्री योगानंद-यति-विरचितं नारायणाष्टकं संपूर्णम् । श्रीसद्गुरुयोगानंदार्पणम०

---

श्रीनारायणएव जगद्गुरुरितिभावः अष्टकं पद्याष्टकविरचितं स्तोत्रं दिवानिशं नक्तंदिनं नेन नत्वस्योपनिषदादेरिव रात्रिपाठे दोषइतिसूचयति । प्रपठेत् प्रकर्षेण अर्थानुसंध पूर्वकं पठेत् उच्चारयेत् तस्मै इतिशेषः गुरुः श्रीनारायणः सुविरागभक्तिसहितं वैराग्यं प्तिसमन्वितं पुष्कलं पूर्णज्ञानं तत्वविज्ञानं दत्वा तं केवलं स्वात्मानं करोति । आत्म मेव विनताय ददाति । अहो श्रीगुरोरौदार्यमत्यंतमाश्चर्यावहमितिभावः । कः कमि त्यपेक्षायां दृष्टांतमाह दीपः यथा कर्पूरकं स्वात्मानं करोति तद्वदित्यर्थः कर्पूर ग्रह णेन पूर्वावस्थायाः अननुगतिं सूचयति । यथा दीपसंयोगेन प्रज्वलितः कर्पूरः सर्वा त्मनादीपत्वं प्राप्नोतिनास्य किंचिदवशिष्यते पूर्वरूपं । एवंजीवोपि श्रीगुरूपदेशात प्रत्यगात्मस्वरूपं निर्विचिकित्सं निश्चित्य साक्षात्कुर्वाणः सर्वथा व्यवहरन्नपि पूर्व दज्ञान कल्पित कर्तृत्व भोक्तृत्वादिविक्षेपविशिष्टं विविधसुखदुःखकलितं जीवभा न कदाचिदपि स्वात्मत्वेन प्रतिपद्यतइतिभावः यः सर्वांतरत्वेन सर्वेषामात्मोन्मुखान स्वात्मरूपप्रदस्तं करुणार्द्रमानसं अतएव गुरुंमुख्यहितोपदेष्टारं नारायणं जीव द्धिप्रेरकं श्रीपरमात्मानं नित्यं अखंडितं नौमि । स्तौमि अत्रहि ग्रंथकर्त्रा ससाधनप ला ब्रह्मविद्या श्रीनारायणस्तुतिव्याजेन प्रत्यपादि तदत्रमननशीलैः श्रवणपठ रसिकैश्च मुमुक्षुभिर्भवितव्यं तेनच फलश्रुत्यनुसारेण ज्ञानविरागसहितमात ज्ञानं प्राप्तव्यं ततश्च मुक्तिःकर एवेति नात्रोदासितव्यं सज्जनैरित्याशास्महे ॥ ७

पूर्णानंदपदानुयायिधिषणो यः शर्मतः कर्मतो योगानंद इति प्रथाम वितथां धत्ते यतीं-द्रः क्षितौ ॥ तेनासौ रचितः सदर्थनिचितो नारायणाभिष्टवोः भीष्टं वो विदधातु
हृंत मननात् तुष्टिं परां पुष्यतु ॥ १

आनंदगंध भृतचिन्मकरंदसांद्रः संश्रित्य सूत्र-परवीं विवृतः प्रयत्नात् ॥
नारायणाष्टकमयोऽष्टकमः सुगुंफो नारायणांघ्रियुगुले विनिवेशितोयम् ॥२

श्रीयोगानंदपादाब्ज मिलिंदायतमानसः ॥
ततान वामनो व्याख्यां सरलां मंगलाभिधाम् ॥३॥

ऋलंबर-गजक्षोणी-संख्याते शालिवाहके ॥
शके १८०६ शके मंगलेच मंगला पूर्णतामगात् ॥४॥

इति क्षीरसागरेत्युपाह्वय-वसिष्ठगोत्रसमुद्भवश्रीमदेकनाथसूनुवामनकविस्ते श्रीनारायणाष्टकव्याख्या मंगलाख्यासमाप्तिमगमत् ॥ ॐगुरुभ्योनमः ॐ तत् सत

# अथ विष्णुलहरी

जगन्नाथपंडितविरचिता.

श्रीवासुदेवायनमः

---

(वंशस्थं वृत्तम्)

निषीदता नाथ विषानलोपमे विषादभूमौ भवसागरे हरे॥
परं प्रतीकारमपास्यताऽधुना मयाऽयमात्मा भवते निवेदितः १
भक्ता[illegible]लविलुसचेतनः शरण्यतेंऽघ्री शरणं भयादयाम्॥
विभाव्य भूयोऽपि दयासुधांबुधे विधेहि तन्नाथ तथा यथेच्छसि २
विहाय संसार महा मरुस्थलीमलीक देहादिमिलन्मरीचिकाम्॥
मनोमृगो मे करुणामृतांबुधे विगाढुमीश त्वयि गाढमीहते॥३

---

## समश्लोकी टीका.

(वसंततिलका.)

आनंदसिंधु नते-बंधु रमाधवाचा॥ याया दयांबु-लहरी लववात साचा ॥
ह्यायाहि चर्वण[4] जना करुणा रसाचें॥ वर्णीन विष्णुलहरी अजि देशांचें[+]॥१॥

(मंदाक्रांता.)

हेरंबातें नमुनि ह्रदयीं चिंतुनी शारदेतें॥ वंदूनि श्रीगुरुपद नतां जें विपत्पार देतें ॥
गीर्वाणीं जी श्रुत रसगुणी श्रीजगन्नाथवाणी॥ ह्याया लोकीं सुपरिचित मी प्राकृता माजि वाणीं॥२
श्रीनाथा हा अनलगरलां तुल्य जो दुःखदाता॥ संसाराब्धी सुतरन[5] खरा यांत मी मग्न होतां॥
सोडूनीयां इतरतरणोपायें विभ्रांति-जाला॥ आतां आत्मा तुज विभुवरा सर्वथा अर्पियेला १
ज्वाळी मातें भवदवशिखा मानसीं शुद्धि नाहीं॥ नाथा आलों शरण चरणां मी असा भीत पाहीं॥
चिंतूनीयां पुनरपि मनीं हे दया क्षीरसिंधो॥ तूतें वाटे मग करि जसें तें तसें दीन बंधो॥ २ ॥
मिथ्या देहादिक मृगजलाभास हा जेथ भासे॥ संसाराख्या प्रखर मरुभू लंघुनी तो प्रयासें
माझा चेतो हरिण[9] करुणासागरा तूज माजी॥ राहाया हा स्थिर विभुवरा इच्छितो आदरा[10] जी ३

---

१ नत (नम्र झालेले) त्यांचा बंधु हितकर्ता अशा श्री विष्णूचा. २ याव यास. ३ कृपारूप उदकाच्या लाटेवरील लेशमात्र वायु. ४ आस्वादन किंवा अनुभव. + महाराष्ट्र भाषेनें. ५ तरण्यास सुलभ ६ दुसरे तरण्यास उपाय आहेत अशा प्रकारच्या भ्रमरूपी जाळ्यास ७ संसाररूपी वणव्याची ज्वाला. ८ मारवाड देशांतली अर्थात् निर्जल भूमि. ९ चित्त हाच हरिण. १० जी (अहो) आदरा (स्वीकार करा.)

त्वदंघ्रि फुल्लांबुज मध्य निर्गलन्मरंदनिष्यंद-नितांत लंपटः॥ ॥
मनोमिलिंदो मम मुक्तचापलस्त्वदन्यमीशान तृणाय मन्यते ४
जगत्त्रयत्राणविधौ धुरंधरं तवांघ्रिराजीव मपास्य ते जनाः ॥
शरण्यमन्यन् मृगयंति यांति ते नितांतमीशान कृतांतदेहलीम् ५
रमामुखांभोजविकासनक्षमो जगत्त्रयोद्बोध विधानदीक्षितः ॥
कदा मदज्ञान विभावरीं हरे हरिष्यति त्वन्नयनारुणोदयः॥ ६
मुनींद्रचित्तैकचकोर जीविका समस्त-संतापचयापनोदिनी ॥
महानिशीथे मम मानसे कदा स्फुरिष्यति त्वन्नखचंद्रचंद्रिका ७
स्फुयौवना पांडुरगंडमंडल प्रतिस्फुरत्कुंडल तांडवाद्भुतम्॥
गदाग्रज त्वन्मुखफुल्लपंकजं कदा मदक्ष्णोरतिथी भविष्यति॥ ८
सुरापगातुंगतरंगचालितां [illegible]॥
कदा दधे देव दयामृतोदधे भवत्पदांभोरुह धूलिधोरणीम्॥ ९

---

श्रीकांता[1] त्वच्चरण विकसत्पंकेजांतूनि[2] पाहें॥ स्त्रेहें वाहे कुसुमे[3] रस त्या लुब्ध जो फार आहे।
माझा चित्तभ्रमर चलता[4] टाकुनी हा त्वदन्या॥ मानी ईशा तृणसम जगीं तुच्छ धन्या वदान्या[5] ४
पद्मानाथा[6] त्रिभुवनजनत्राणदा सौख्य सद्मा[7]॥ लोकीं जेकीं कुजन तुझिया टाकुनी पादपद्मा।
अन्या नाथा[8] हुडकिति अहो अज्ञता केवढी ते॥ ईशा जाती यमसदनिंच्या सत्यते देवढी तें॥ ५॥
श्रीदेवीच्या वदनकमला जो समुल्लास[9] देतो॥ जो कीं टीसा त्रिभुवन जनां जागवायासि घेतो।
ऐसा तूझा सदयनयनार्कोदय[10]श्रीहरी तो॥ केव्हां मोहाभिध रजनिला माझिया संहरी तो ६
जीवातू[11] जी भजि मुनिजनश्रेष्ठचेतश्चकोरा[12]॥ जी तमांच्या त्वरित करिते अंत संतापभारा॥
ती मच्चित्तीं कधिं बहुतमीं[13] अर्धरात्रीं पमींही॥ स्फूर्ती पावे तव नख[+] मया इंदुची चंद्रिका[14] ही ७
तारुण्यानें स्फधवळ[15] अशा गल्लदेशावरी तीं॥ ज्याच्या नृत्या नवल परिच्या कुंडलें हो करीती।
फुल्लांभोजासम[16] मुख तुझें तें तसें वासुदेवा॥ केव्हां माझ्या अतिथि[17] नयनां सांग होईल देवा ८
स्वर्गंगेच्या पृथुल लहरी जीस त्या चाळवीती॥ हर्षे जेथें सुर असुरही भाळ ते लोळवीती।
देवा त्या त्वत्पदकमळिंच्या धूळिच्या शुद्ध वाटे॥ केंमी पावें ह्रदयिं करुणासागरा हें चि वाटे ९

---

१ लक्ष्मीपते· २ तुझें चरण हेंच विकसित कमळ त्यांतून· ३ मकरंद· ४ चांचल्य· ५ उदारास· ६ लक्ष्मी· ७ गृह· ८ आश्चास· ९ अधिक उल्हास· १० नयन हाच अर्क त्याचा उदय· ११ उपजीविकेचें साधन· १२ चित्तरूपी चकोरांस १३ बहुत आहे तम अज्ञान पक्षीं अंधकार ज्यांत अशा माझे चित्तीं· १४ चांदणें· १५ अत्यंत पांडुरकें १६ प्रफुल्लित कमल १७ गोचर + नखरूपी·

मनोजवाश्छिन्नविवेकरश्मयो मदोद्धता देव मदक्षवाजिनः॥
अलं समासाद्य तवांघ्रिमंदुरामपास्तवेगा दधतां सुशीलताम् १०
पुरातनानां वचसामगोचरं महेशितारं पुरुषोत्तमं पतिम् ॥
अपास्य तं त्वां निरपत्रपा सती सती मतिर्मे कथमन्यमेष्यति ११
न जाग्रति स्वप्नदशांतरेऽपि वा परं विजाने त[illegible] पादपंकजात्॥
इति स्म सत्यं यदि भाषितं मया कदा जगन्नाथक मामुरीकुरु १२

(वियोगिनी वृत्तम्)

इति दीनतरं दयानिधे दुरवस्थं सकलैः समुज्झितम् ॥
अधुनाऽपि न मां निभालयन् भजसे हा कथमश्मचित्तताम् १३
स महांति जगंति बिभ्रतस्तव यो नाविरभून्मनागपि
स कथं प[illegible] देहिनः परमाणोर्मम धारणे श्रमः १४
नितरां विनयेन पृच्छते सुविचार्योत्तर मत्र यच्छ मे ॥
करितो गिरितोऽप्यहं गुरुस्त्वरितो [illegible] यदद्य मां ॥ १५

---

जे छेदीती स्वचपळ जवें सन्मती रश्मि[1]राजी॥ माझीं गाजीं त्रिभुवन-पते इंद्रियें मत्त वा[2]जी
त्वत्पादाख्या मिळवुनि विभो अश्वशाला विशाला॥ चांचल्यातें त्यजुनिच तिहीं बाधरावें सुशीला. १०
जो प्राचीना निगम[3]वचना नाकळे सर्वसाक्षी॥ विश्वाधीशा प्रथम पुरुषोत्त[4]म जो सर्व रक्षी॥
ऐशा ईशा त्यजुनि तुजला सोडुनी लाज सारी॥ माझी शुद्धा सुमति इतरांते कसी अंगिकारी ११
वागे जागेपणिं तरि तुझ्या वीण कांहीं न जाणें॥ स्वप्नींही त्वच्चरण कमला वांचुनी अन्य नेणें॥
माझें आहे वचन जरि हें सत्य कीं दीननाथा॥ स्वीकारीशी तरि कधिं जगन्नाथ हा विश्वनाथा १२

(मालिनी.)

अति पतित असा मी संकटामाजि आहें॥ स्वजन त्यजिति ज्यातें हे दयासिंधु पाहें॥ ॥
अझुनि हि नचि मातें पाहसी दीननाथा॥ उप[5]ल सम कसा बा होसि चित्तीं समर्था॥ १३
धरुनि उदरिं सारीं हीं जगें मोठमोठीं॥ श्रम तुज नचि झाला अल्पही कल्पकोटी॥ ॥
त्रिभुवन जनत्त्स्था त्या तुला होय ऐसा॥ नवल! मज अणूच्या धारणीं शीण कैसा १४
तुज अति विनयानें पूसतों लोकपाळा॥ करुनि मनिं विचारा उत्तरा दे कृपाळा॥ ॥
करि[6]हुनि गिरि[7]हूनी थोर मी काय ताता॥ त्वरित मजसि कां तूं उद्धरीनासि आतां १५

---

१ दोरांचे समुदाय. २ घोडे. ३ वेदवाणीस. ४ पुरुषश्रेष्ठ. ५ दगड. ६ गजेंद्राहून. ७ गोवर्धन पर्वतापेक्षां. + येथें मूळाच्या जुन्या प्रतीवर "सुविचारोत्तम यच्छ यच्छ मे" असा पाठ आहे. परंतु तो लागत नसल्यामुळें वरच्या प्रमाणें शोध केला आहे.

न धनं न च राज्यसंपदं नहि विद्यामिदमेकमर्थये ॥
मयि धेहि मनागपि प्रभो करुणाभंगितरंगितां दृशम् ॥ १६ ॥
अयमत्यधमोपि दुर्गुणो भवनीयो भवता दयानिधे ॥
वमतां फणिनां विषानलं किमु नानंदयतीह चंदनः ॥ १७ ॥
क्षुधितस्य नहि त्रपास्ति मे प्रतिरथ्यं प्रतिगृह्णतः कणान् ॥
अकलंकयशस्करं न ते भवदीयोपि यदन्यमृच्छति ॥ १८ ॥
नितरां नरकेऽपि सीदतः किमु हीनं गलितत्रपस्य मे ॥
भगवन् कुरु सूक्ष्ममीक्षणं परतस्त्वां जनता किमालपेत् ॥ १९
नरके निजकर्मकल्पिता भजतो मे महतीरपि व्यथाः ॥
इदमे [illegible]मीक्षका यदनाथं निगदंति मां विभो ॥ २० ॥ ॥
मृगदंतिमुखान् मया सह प्रतिरुद्धान् भवजालबंधने ॥
तव मामपहाय मुंचतः करुणा किं न भिनत्ति मानसम् ॥ २१ ॥
निरुपाधि जनार्तिहारिणं भगवंस्त्वामवबुध्य तत्त्वतः ॥
कृत [illegible] कथमब्जेक्षण मामुपेक्षसे ॥ २२ ॥ ॥

---

नचि नृपपद विद्या वांछिं हें चित्त हेमीं ॥ निरत नचि, समर्था प्रार्थितों एक हें मी ॥
मजवरि करुणाब्धे अल्पही ठेविं दृष्टी ॥ सकरुण जगदीशा मी असें फार कष्टी ॥ १६
अधम जरि असें मी दुर्गुणी देव देवा ॥ तरि तुह्मिं रक्षावावा दीन हा वासुदेवा ॥
जरि भुजग विषाग्नी ओकतीही अगा ते ॥ तरि न रक्षविजे कीं, चंदनें पन्नगांतें ॥ १७
क्षुधित ह्मणुनि मातें सर्वथा लाज नाहीं ॥ कण पथिं पथिं नाथा वेंचितां ना जनाहीं ॥
परि विमल यशातें बा तुझ्या कालिमा कीं ॥ त्वदनुचर दुज्यातें श्रीधरा दैन्य भाकी १८
अतिशय नरकींही कष्टलों यातनानीं ॥ तरि मज गत लज्जा काय हो त्यांत हानी ॥
परि करि भगवंता सूक्ष्म दृष्टीस सांगें ॥ वदतिल जन तूंतें काय हें स्पष्ट मागें ॥ १९
नरकिं निजकृतीनें या महा यातनाही ॥ घडति तरि मला कीं बा व्यथा यांत नाहीं ॥
परि मज नचि साहे एक हें लोकराया ॥ अशरण ह्मणतीजे प्रेक्षितें किंकराया ॥ २०
गज हरिण तसे जे अन्य जन्मासि आले ॥ मजसह भवजालें बद्ध संरुद्ध झाले ॥
करिसि मजविणें त्या मुक्त या पंक्ति भेदीं ॥ न सदय त्वदयातें ते दया काय भेदी २१
निरखिसि न निमित्ता वारिशी लोकचिंता, समजुनि भगवंता सत्य हें मी अनंता ॥
सकल सुकृत कर्मी हेलना स्पष्ट केली ॥ उबगसि कमलाक्षा त्या कसा कष्टकालीं २२

---

१ येथें 'जनतः' असें सूक्त प्रतीत होतें. २ रस्त्यांचे ठिकाणीं. ३ हे कृपासागरा. ४ सर्पास. ५ तुझा सेवक. ६ ज्यास रक्षण करणारा कोणी नाहीं असा अनाथ ७ पाहणारे. ८ रोधले गेलेले. ९ कारण, पुण्यादिक. १० हे कमलनेत्रा.

सततं निगमेषु शृण्वता वरद त्वां पतितानुपावनम्॥
पुरु पापमुपास्यते ऽनिशं त्वयि विश्वासधिया मया विभो॥ २३॥
सुकृतं न कृतं पुरा कदाऽप्यथ सर्व कृतमेव दुष्कृतम्॥
अधुना गलितह्रिया मया भगवंस्त्वां प्रति किं निगद्यताम्॥ २४॥
मदकाममविमोहमत्सरा रिपवस्त्वत्पुर एव विक्लमम्॥
धृतशार्ङ्गगदारिनंदक प्रतिकर्षंति कथं न बुद्ध्यसे॥ २५॥
अपि गर्तमुखे गतः शिशुः पथि केनापि निवार्यते जवात्॥
जनकेन पतन् भवार्णवे न निवार्यो भवता कथं विभो॥ २६॥
सुकृतप्रिय इत्यथास्तु ते सुकृतिभ्यः सुखदश्च सुप्रथा॥
अपि पापमबिभ्रतस्तु मां तव विश्वंभर–नाम दुर्लभम्॥ २७॥
वचनैः परुषैरिह प्रभो यदि रोषं स ॱ पागतोसि मे॥
मुखरं कृतकोटि-कल्मषं करुणाब्धे जगतोपसारय॥ २८॥
यदि वीक्ष्य ददासि मत्कृतिं न मयैव प्रतिगृह्यते तदा॥

---

श्रुति[१]गण पतितांच्या पावना तूज वाणी॥ सततहि वरदा ती ऐकुनी वेदवाणी॥
अमित दुरितें देवा सर्वदा मी करीतों॥ धरुनि भरंवसा कीं एक तूझ्या वरी तो २३
सुकृत लव न पूर्वी मीं कधीं आचरीला॥ सकल दुरित-राशी सर्वदा आदरीला॥
मग विगलित लज्जें म्यां तुला काय आतां॥ वद वदनिं वदावें षड्गुणेश्वर्यवंता २४
मद मदन विमोह क्रोधमात्सर्य तृष्णा॥ सकलहि रिपु तूझ्या सन्निधांनींच कृष्णा॥
हरिति मज सुदीना चक्रसारंगपाणे॥ धरिसि असि-गदा हें लज्जती केवि नेणें॥ २५
जरि लघु शिशु गर्तद्वारिं लागे शिराया॥ पथिं कवणहि वेगें वारि त्या देवराया
त्रिभुवनजनका मी जो पडें मूढ ऐसा॥ भवजलनिधिमाजी वारिजे त्वां न कैसा २६
असति सुकृति लोकां सौख्यदाता ह्मणून॥ सुकृतदयित हे न ख्याति योग्या ह्मणून॥
परि जरि अति पापा ही मला साधुसंख्या॥ न भरिसि तरि लाधेनाचि विश्वंभराख्या २७
अजि अति कठिनांही हे प्रभो मद्वचांहीं॥ तुज मनिं करुणाब्धे ये जरी रोष कांहीं॥
तरि मुखर खरा मी पातकें केलिं सारीं॥ म्हणउनि मज विश्वांतूनि तूं दूर सारीं २८
जरि निरखुनि माझें कर्म तूं देसि कांहीं॥ तरि समज समर्था मीच तें घेत नाहीं॥

---

१ वेदसमूह. २ पाप. ३ समीर. ४ खड्ग. (नंदक) ५ पुण्यप्रिय. ६ साधुशीं ज्याचें सख्य आहे अशा हे देवा. ७ विश्वंभर हें नांव. ८ माझ्या भाषणानीं. ९ वाचाळ.

अथ चेन् निजमाशयं तदा परितुष्यन् शिरसा बहामि तत् ॥ २९ ॥
पतितोप्यति दुर्गतोपि सन् न कृतज्ञो निखिलागसां पदम् ॥
भवदीय इतीरयंस्त्वया दयनीयस्त्वपनीय केवलम् ॥ ३० ॥
सुकृतप्रकृतौ जने त्वया कृतया किं कृपया कृपानिधे ॥
यदि मादृशि सा विधीयते तव कीर्तिर्वद कीदृशी तदा ॥ ३१ ॥
अयि शैशव लालितः शिशुः प्रतिबुद्धो जनकेन ताड्यते ॥
न कदाप्यनु लालितस्त्वया किमु ताड्यो भगवन् कुकर्मभिः ॥ ३२ ॥
अहमेव हि दोष दूषितो भगवंस्त्वां समुपालभे मुधा ॥
रमणी विरहज्वर ज्वलन्नमृतांशुं कुमतिर्विनिंदति ॥ ३३ ॥ ॥
करुणाकर दुर्दशाकुलं पतितालंबन पापपंजरम् ॥
अमृतांबुनिधे महाज्वरं नहि जह्या जगदीश जातु माम् ॥ ३४ ॥
कटु जल्पनमल्पकस्य मे नहि ते कल्पयतु क्रुधं विभो ॥
कुपितातुरबालभाषितं नहि गृह्णंति मनाङ् महाशयाः ॥ ३५ ॥

---

जरि निज हृदयींचा भाव देखूनि देशी, तरि धरि परितोषें ते हरी शीर्षदेशीं ॥ २९ ॥
अति पतितहि तैसा सर्व दुःखांसि थारा ॥ सकल दुरितराशी न स्मरे उपकारा ॥
परि सतत ह्मणे कीं, मी तुझा याचि लाजें ॥ विजनिं करिं दया ते योग्य वाटे तुला जे ३०
जरि करिशि कृपा तूं पुण्यशीला जनाला ॥ तरि फळ करुणाब्धे काय पूसें मनाला ॥
जरि हरि मज ऐशा पामरीं ती करीसी ॥ तरि मग वद तूझी कीर्ति होईल कैसी ॥ ३१
जनिं शिशुपणिं तातें लालिजे ज्या सुतातें ॥ दमनहि करि त्यातें तो प्रबुद्धासि हातें ॥
कधिं तुम्हिं भगवंता लाड माझा न केला ॥ मग उगिच कुकर्मी ताडिजे काय बोला ३२
अजि अखिलहि दोषीं मीच दोषी दयाला ॥ सकळ विफळ तूझा हा उपालंभ केला ॥
सुतनु विरहतापें तप्त होऊन देहीं ॥ नकळुनि मतिमंदें निंदिजे इंदुतेंही ॥ ३३ ॥ ॥
अजि निधि करुणेचा तूंहि मी दुर्दशांचा ॥ पतितगतिद तूं मी पिंजरा पातकांचा ॥
अमृत जलनिधी तूं मी महारुग्ण ताता ॥ त्यजि मज जगदीशा तूं कधींही न आतां ३४
कटु वचनहि माझें पामराचें कृपाळा ॥ तव मनिं न उठवो हे रोष बा लोकपाळा ॥ ॥
व्यथित कुपित बोले बाल जो बोल तो कीं ॥ न धरिति मति माजी अल्पही थोर लोकीं ३५

---

१ संतोषानें २ मस्तक प्रदेशावर. ३ एकांतीं. ४ ताडन. ५ निंदायुक्त भाषण. ६ सुंदरीच्या वियोगदुःखानें. ७ चंद्रास. ८ पाप्यास गति देणारा. ९ समुद्र. १० रोगी. ११ दुःखित.

भुजगाहितकल्पितध्वज-स्फुरदाशाभुजगालिवेल्लितम् ॥
जटिलज्वरकुंजरांकुश-ज्वरजुष्टं न जहीहि जातु माम् ॥ ३६ ॥
अपि शर्वपितामहादिभिर्भजनीयः पुरुषोत्तमोपि यः ॥
तमु[illegible]नमुद्धतं धिगिमं मां धिगिमां धियं मम ॥ ३७ ॥
अथ सर्वमिदं मयोज्झितं भवतोऽन्यन्न हि किंचिदर्थये ॥
अपि दर्शय मे दयानिधे हरचेतोहरणं वपुस्तव ॥ ३८ ॥
स्फुटरत्नमयावनीतले वरवृंदाविपिने विलासिनि ॥
मणिमंडपमध्यविस्फुरद्विबुधक्ष्मारुहमूलमाश्रितम् ॥ ३९ ॥
शिखिपिच्छमहामणि[illegible]कुंचितकांतकुंतलम् ॥
अतिनीलघनालकावलिभ्रमणभ्राजि ललाटपट्टले ॥ ४० ॥
शरदिंदुसहोदराननं स्फुरदंभोजपलाशलोचनं ॥
अरुणाधरकांतिदंतुरं स्फुटदंतांशुविकासितांबरम् ॥ ४१ ॥

---

ध्वज तुज भुजंगारी[1] मी तुझा भृत्य[2] दारीं ॥ भुजगसम दुराशा संघ[3] ज्या पीडि भारी ॥
ज्वरगजिं गिरिशाच्या[4] अंकुशा सर्वसाक्षी ॥ ज्वरित बहुत मीया तूं कधींही नुपेक्षीं ३६

(वसंततिलका.)

ज्यातें विरिंचि[5] शिव मुख्यहि देव सारे ॥ आराधितात पुरुषोत्तम तूं असा रे ॥
त्या तूज उद्धतपणें[6] कटु बोललों की ॥ धिक्कार हा मजहि मन्मतिलाहि लोकीं ॥ ३७ ॥
आतां मियां सकळ हें जग सांडियेलें ॥ कांहीं अभीष्ट[7] तुजवीण मनीं न ठेलें ॥
जें रूप शंभुहृदया हरितेंचि देवा ॥ दावीं मला आजि दयानिधि हाचि हेवा ॥ ३८ ॥
विस्पष्ट- रत्नमयभूतल जेथ आहे ॥ वृंदावनीं[8] सुखविलास- घनींच राहे ॥
जें[9] कीं सुरम्य मणिमंडप- मध्यभागीं ॥ कल्पद्रुमातळिं बसे घननीळ[10] आंगीं ॥ ३९ ॥
अत्यंत नीळ बहु दाट सुरम्य केशीं ॥ शोभे अशा परम-भव्य ललाट-देशीं ॥
जो बर्हिपिच्छ[11] मणियुक्त किरीट कांति ॥ तेणें जयासि विलसे विमलाल[12] कांती ॥ ४० ॥
जें शारदेंदु[13] सदृशा धरि आननातें[14] ॥ उत्फुल्ल पंकजदलोपरि[15] लोचनातें ॥
आरक्त दिव्य अधरीं धरितें प्रभा ते ॥ जें स्वच्छ दंतकिरणीं धवळी[16] नभातें ॥ ४१ ॥ ॥

---

१ भुजगांचा (सर्पांचा) अरि (शत्रु.) असा गरुड. २ सेवक ३ समूह ४ शिवाच्या. + हे शिवज्वरगजाविषयीं अंकुशा विष्णो. ५ ब्रम्हदेव. ६ उद्धटपणानें. ७ वांछित ८ व्यास (अशा वृंदावनीं) ९ जें (रूप) या श्लोकापासून ९२वे श्लोकापर्यंत विष्णूच्या स्वरूपाचें वर्णन आहे व तें वपु मदीयहृदयास्पद होवो असा शेवटील श्लोकांत अन्वय पूर्ण होत आहे. म्हणून हें १४ श्लोकांचें कुलक समजावें. व हें संपे पर्यंत 'जें हें संबंधी सर्वनाम अपूर्ण असें जेथें येईल तेथें त्याचा अर्थ जें वपु असा सर्वत्र समजावा. १० मेघ. ११ मयूरपिच्छें. १२ स्वच्छ केशपाशांत. १३ शरदृतूंतील चंद्रासारख्या. १४ मुखास १५ कमलपाकळी १६ शुभ्रकरी.

दरपांडुरगंडमंडल प्रतिशंसत्कमनीय - कुंडलम् ॥
मणिमौक्तिकमंजुमंजरीमहनीयद्युतिरंजितश्रुति ॥ ४२॥
पृथुवर्तिलमौक्तिकावलीस्पर्शमावेल्लितकांतकंधरम् ॥
तुलसीनवमंजरीरजःपटलोल्लासितवक्षसांचितम् ॥ ४३॥
चरणाब्जनखावलंबिनीं भुजगाकारभुजांतरागताम् ॥
चपलामनुशायिनीमिवोद्वहद्दुत्फुल्लवनामलस्रजम् ॥ ४४॥
मणिकंकणकांतिभागलं दरफुल्लांबुज-सुंदरद्युति ॥
पतितोद्धरणे धुरंधरं कमनीयं करयोर्युगं दधत् ॥ ४५॥
नवरत्नमयांगुलीयक-प्रतिभापिंजरितांगुलीगणैः ॥
मुहुराकुलितेन वेणुना वशयच्चारु चराचरांतरम् ॥ ४६॥
उदरद्युतिनिम्नगोच्छलल्लहरीरूपकरोमराजिकम् ॥
पशुपालविलासिनीमिलन्नयनाकर्षणरश्मिभिर्नतम् ॥ ४७॥

---

जें अल्पशुभ्र स्वकपोलकमंडलांशीं ॥ शोभे धरूनि रुचिराकृति कुंडलांसी ॥
ज्याचे श्रुतीस मणिमौक्तिक मंजरी ते ॥ संदर्शनीय रुचिनें अति रंजवीते ॥ ४२॥
जें स्थूल मुक्तमय हार हरी धरी तें ॥ तत्कांति ज्या खुलवि सुंदर कंधरीं ते ॥
धूली समूह तुलसीनवमंजरींचा ॥ वक्षस्थलींहि बहु शोभवि ज्यासि साचा ॥ ४३॥
आली भुजंगसम बाहु-युगांतुनी जी ॥ राहे पदीं करुनि वास नखेंदु माजी ॥
ती फुल्ल निर्मल जिथें वनपुष्पमाला ॥ शोभे हृदि- स्थित रमाचि जणों सुलीला ॥ ४४
जेथें सुरम्य मणि-कंकण शोभताति ॥ जें अर्धफुल्ल कमलापरि दिव्य-कांति ॥
जें कीं धुरीण पतितांप्रति उद्धराया ॥ तें चारुहस्तयुग जें धरि देवराया ॥ ४५॥
सन्मुद्रिकानवमणिद्युतिंच्या लवानीं ॥ अत्यंत रंजित नवांगुलिपल्लवांनीं ॥
स्पर्शूनि वेणुसि अनुक्षणिं मंजुगीतें ॥ जें कीं करी वश चराचर लोकचित्तें ॥ ४६॥
भासे नदीच उदरच्छवि हो ज्याची ॥ ती रोमपंक्ति उसळे लहरी तयेची ॥
कीं गोपिका जन विलोकि मिळूनि वाटे ॥ त्याचे सुदृक्किरण वंदिति ज्यास वाटे ४७

---

+ येथें मूल प्रतींत 'प्रतिसंसत्' असा पाठ आहे. * येथें 'सुरवमा' असा पाठ आहे; परंतु ते लागत नसल्यामुळें वरील प्रमाणें शोध केला आहे. १ गंडस्थळें २ कर्णासि ३ कांतीनें ४ कंठाचे ठिकाणीं ५ हृदय ६ नखरूपी चंद्रामध्यें ७ अतिचंचल ८ धुरंधर ८ सुंदरी ९ कांति १० क्षणोक्षणीं ११ कांति १२ सुंदर दृष्टीचे किरण

कनकद्रवगौरमंबरं दधदूरुद्वितयेन सुंदरम् ॥
उदयन्मणिनूपुरप्रभा- सरणिश्रेणिजटालजानुकम् ॥ ४८ ॥
अतिजीर्णगजेंद्रगोपने दधता जांघिकतामलौकिकीम् ॥
त्रिजगन्महनीयमूर्तिना वरजंघायुगुलेन शोभितम् ॥ ४९ ॥
कुलिशांकुशवारिजध्वजांबुजचक्राद्यभिरामलक्ष्मणा ॥
अरुणारुणकोमलत्विषा कमनीयेन तलेन राजितम् ॥ ५० ॥
विधिशर्वमुखामरावली- मुकुटोन्निद्रमणिप्रभाविलम् ॥
नखचंद्रमयूखमूर्छितारिवलतापं पदयोर्युगं दधत् ॥ ५१ ॥
सरतः सरणौ सतो बहिः स्वपतो वा लपतो गृहांतरे ॥
वपुरीदृशमीश तावकं हृदयालंबनमस्तु मे सदा ॥ ५२ ॥
प्रणिपत्य हरे भवंतमद्धा विनिबद्धांजलिरेकमेव याचे ॥
जनुरस्तु कुले कृषीवलानामपि गोविंदपदारविंदभावः ॥ ५३ ॥

---

जें कीं सुवर्णरसपीन सुकांतिराशी ॥ ऊरूद्वयें धरि अशा रुचिरांबरासी ॥
तेजस्वि-रत्नमयनूपुरदीप्तिजोलें ॥ तेजाळ जानुहि यदीय गमे बुजालें ॥ ४८ ॥
अत्यंतजीर्णगजरक्षण तें कराया ॥ जें कीं अलौकिक जंघा धरि देवराया ॥
त्रैलोक्यपूजित यदाकृति फार साजे ॥ जंघाद्वयें अजि अशा बहु जें विराजे ॥ ४९ ॥
वज्रांकुश ध्वज सरोजें सशंख चक्र ॥ हीं लक्षणें शुभ जिथें असती अवक्र ॥
आरक्त फार सुकुमारचि कांति ज्याची ॥ ईशा अशा पदतळें विलसे तसेंची ॥ ५०
ब्रम्हेशमुख्य- सुरपंक्ति- किरीटरत्नें ॥ ज्या व्यापिती सुविमलद्युतिनें प्रयत्नें ॥
जें कीं नखेंदुकिरणीं हरि सर्व तापा, ऐशा पदांबुजयुगा धरि जें सुरूपा ॥ ५१ ॥
मी चालतां पथि विभो गृह बाह्य-भागीं ॥ कीं बोलतांहि निजतां सदनांतरंगीं ॥
जें वर्णिलें वपु तुझें अजि तेंचि देवा ॥ होवो मदीय हृदयास्पद वासुदेवा ॥ ५२

प्रहर्षिणी.

वंदूनीं तुजसि विभो समक्ष आजी ॥ जोडूनी करयुग हेंचि याचितों जी ॥
शूद्रांच्या कुळिंहि कुजन्म तें मला हो ॥ गोविंदा परिपदपद्मिं भाव लाहो ॥ ५३ ॥

---

१. मांड्या. २ वस्त्र. ३ समूह. ४ ज्या वपूचे ५ वेगास. ६ पोटऱ्या. ७ कमळ ८ शरीर. ,, सगुणरूप. ९ माझ्या हृदयाचें निवासस्थान. १० चरणकमलीं.

